परन्तु अनुस्वारस्य स्थाने ॐ इत्यादेशः। तस्य ॐकारस्य त्रैवि-ध्यं ह्रस्वदीर्घगुरुभेदैः। ह्रस्वात्-एकमात्रिकात्परो दीर्घो, दीर्घा-द्-द्विमात्रिकात्परो ह्रस्वः, गुरौ-संयुक्ताक्षरे परे गुरुर्बोध्यः। यद्यपि दीर्घोऽपि गुरुर्भवति तथापि संयोगे परे ह्रस्वस्यापि गुरु-संज्ञाविधानात् ह्रस्वात्परस्यापि संयोगे परे गुरुत्वविधानात्ततो विशेषः। यथा—त्रिंशद्धामेत्यादौ ह्रस्वात्परो दीर्घः, पृथि-व्याॐशतेन पाशैरित्यादौ दीर्घात्परो ह्रस्वः कल्पन्ताॐश्रो-त्रम्, सोमानॐस्वरणम् इत्यादौ संयोगे परे ह्रस्वाद्दीर्घाच्च परो गुरुः।

अन्यत्र शषसहरेफपरत्वाभावे परा अनुस्वारात्परा तत्स वर्णा या ईषत्प्रकृतिः तया उच्चारणम्। अर्थात् परत्र विद्यमा-नवर्णवर्गीयपञ्चमवर्णसदृशमुच्चारणं कर्तव्यमिति फलति ॥

**विसर्गेष्वीषद् विरामः ॥ २ ॥** विसर्गेषु अः इत्यादिषु ईषत् विरामः किञ्चिद्विरम्यते, विसर्गस्य स्पष्टोच्चारणार्थम्।

**पदाद्यस्यासंयुक्ताकारस्येषद्दीर्घता च भवतीषद्दी-र्घता च भवति ॥ ३ ॥** पदादौ विद्यमानस्यासंयुक्तस्य व्य-ञ्जनायुक्तस्य अकारस्येषद्दीर्घता भवति। अश्मन्नूर्जमित्यत्र शका-रात्पूर्वः अकारः ईषद्दीर्घो न भवति संयुक्तत्वात्। पदादौ विद्य-मानस्येत्युक्त्या गोपतावित्यादौ पकारोत्तराकारस्य न दीर्घता। अकारस्येत्युक्त्या च विभ्राडित्यादाविकारस्य न दीर्घता। कि-न्तु वसोः पवित्रमित्यादौ वकाराकारस्य पकाराकारस्य च दी-र्घता। तथाच तयोः ईषद्दीर्घोच्चारणं यथा भवति तथा पठनी-यम्। एवमन्यत्रापि बोध्यम्। अन्ते द्विरभ्यासः परिसमाप्त्य-र्थः। कं० ॥ ३ ॥

इति कात्यायनकृतपरिशिष्टसूत्रस्य (प्रतिज्ञासूत्रस्य) व्याख्यानम् ॥

शम्।